॥ श्रीबालात्रिपुरसुन्दरीस्तोत्रम् ॥
॥ श्री बालात्रिपुरसुन्दर्यै नमः ॥

॥ पूर्वपीठिका ॥

श्री भैरव उवाच
अधुना देवि ! बालायाः स्तोत्रं वक्ष्यामि पार्वति ! ।
पञ्चमाङ्गं रहस्यं मे श्रुत्वा गोप्यं प्रयत्नतः ॥

॥ विनियोग ॥

ॐ अस्य श्रीबालात्रिपुरसुन्दरीस्तोत्रमन्त्रस्य
श्री दक्षिणामूर्तिः ऋषिः, पङ्क्तिश्छन्दः,
श्रीबालात्रिपुरसुन्दरी देवता, ऐं बीजं, सौः शक्तिः,
क्लीं किलकं, श्रीबालाप्रीतये पाठे विनियोगः ।

॥ ऋष्यादि न्यास ॥

ॐ श्री दक्षिणामूर्तिऋषये नमः - शिरसि ।
ॐ श्री पङ्क्तिश्छन्दसे नमः - मुखे ।
ॐ श्रीबालात्रिपुरसुन्दरी देवतायै नमः - हृदि ।
ॐ ऐं बीजाय नमः - नाभौ ।
ॐ सौः शक्तये नमः - गुह्ये ।
ॐ क्लीं कीलकाय नमः - पादयोः ।
ॐ श्रीबालाप्रीतये पाठे विनियोगाय नमः - सर्वाङ्गे ।

॥ करन्यासः ॥

ॐ ऐं अङ्गुष्ठाभ्यां नमः ।
ॐ क्लीं तर्जनीभ्यां नमः ।
ॐ सौः मध्यमाभ्यां नमः ।
ॐ ऐं अनामिकाभ्यां नमः ।
ॐ क्लीं कनिष्ठिकाभ्यां नमः ।
ॐ सौः करतलकरपृष्ठाभ्यां नमः ।

॥ अङ्गन्यास ॥

ॐ ऐं हृदयाय नमः ।

ॐ क्लीं शिरसे स्वाहा ।
ॐ सौः शिखायै वौषट् ।
ॐ ऐं कवचाय हुम् ।
ॐ क्लीं नेत्रत्रयाय वौषतट् ।
ॐ सौः अस्त्राय फट् ।

॥ ध्यान ॥

अरुणकिरणजालै रञ्जिताशावकाशा ।
विधृतजपवटीका पुस्तकाभीतिहस्ता ।
इतरकरवराढ्या फुल्लकह्लारसंस्था ।
निवसतु हृदि बाला नित्यकल्याणरूपा ॥

॥ मानस पूजन ॥

ॐ लं पृथिवीतत्त्वात्मकं गन्धं श्रीबालात्रिपुराप्रीतये समर्पयामि नमः ।
ॐ हं आकाशतत्त्वात्मकं पुष्पं श्रीबालात्रिपुराप्रीतये समर्पयामि नमः ।
ॐ यं वायुतत्त्वात्मकं धूपं श्रीबालात्रिपुराप्रीतये घ्रापयामि नमः ।
ॐ रं अग्नितत्त्वात्मकं दीपं श्रीबालात्रिपुराप्रीतये दर्शयामि नमः ।
ॐ वं जलतत्त्वात्मकं नैवेद्यं श्रीबालात्रिपुराप्रीतये निवेदयामि नमः ।
ॐ सं सर्वतत्त्वात्मकं ताम्बूलं श्रीबालात्रिपुराप्रीतये समर्पयामि नमः ।

॥ मूल श्रीबालास्तोत्रम् ॥

वाणीं जपेद् यस्त्रिपुरे ! भवान्या बीजं निशीथे जडभावलीनः ।
भवेत स गीर्वाणगुरोर्गरीयान् गिरीशपत्नि प्रभुतादि तस्य ॥ १॥ var प्रभयार्दि तस्य
कामेश्वरि ! त्र्यक्षरी कामराजं जपेद् दिनान्ते तव मन्त्रराजम् । var जपेद् रतान्ते
रम्भाऽपि जृम्भारिसभां विहाय भूमौ भजेत् तं कुलदीक्षितं च ॥ २॥

तार्तीयकं बीजमिदं जपेद् यस्त्रैलोक्यमातस्त्रिपुरे ! पुरस्तात् ।
विधाय लीलां भुवने तथान्ते निरामयं ब्रह्मपदं प्रयाति ॥ ३॥

धरासद्मत्रिवृत्ताष्टपत्रषट्कोणनागरे ।
विन्दुपीठेऽर्चयेद् बालां योऽसौ प्रान्ते शिवो भवेत् ॥ ४॥

॥ फलश्रुति ॥

इति मन्त्रमयं स्तवं पठेद् यस्त्रिपुराया निशि वा निशावसाने ।

स भवेद् भुवि सार्वभौममौलिस्त्रिदिवे शक्रसमानशौर्यलक्ष्मीः ॥ १॥

इतीदं देवि ! बालाया स्तोत्रं मन्त्रमयं परम् ।
अदातव्यमभक्तेभ्यो गोपनीयं स्वयोनिवत् ॥ २॥

॥ श्रीरुद्रयामले तन्त्रे भैरवभैरवीसंवादे
श्रीबालात्रिपुरसुन्दरीस्तोत्रम् ॥